* ॐ *

श्रीशङ्कराचार्यो विजयतेतराम्।

# श्रीमज्जगद्गुरु शाङ्कर मठ विमर्शः

सम्पादकौ प्रकाशकौच —

पं० प्रतापं सीताराम शास्त्री न्यायाचार्यः

पं० जयपुर गणपति विश्वनाथ शर्मा।

मुद्रक—पण्डित जानकी शरण त्रिपाठी,
सूर्य प्रेस, बुलानाला, बनारस सिटी।

सम्वत् १९९१ क्रि० १९३५

# विज्ञप्तिः ।

श्रीकांचीकामकोटिकुम्भकोणमठाभिमानिनः केचन विपश्चितो यत आदौ श्रीशंकरभगवत्पादाचार्यैः कांचीकामकोटिमठ एव स्थापितः । यतः श्रीमदाचार्याः काञ्च्यामेव स्वशरीरं तत्यजुरतस्तन्मठाधिपतय एव जगद्गुरव इति श्रीशंकराचार्यचरित्र नामकादि पुस्तकेषु पण्डित पामरावबोधाय वृतान्त प्रत्रिकासुच प्रकाशयित्वा पामरान्विमोहयन्तीत्यतो यतार्थ जिज्ञासूनामुपयोगार्थमयं संग्रहः ।

(१) प्रथमतः श्रीशंकरभगवत्पादाचार्याः श्री शृंगेरी, द्वारिका, जगन्नाथपुरी बदरीकाश्रमाख्य चतुर्ष्वेव क्षेत्रेषु चत्वार्येवपीठानि संस्थापितवन्तः न काञ्च्यामेभ्योऽन्यं कंचन मठं प्रत्यष्ठापयन्निति ।

(२) किंच श्रीमदाचार्याः हिमवत्पर्वतएवावतर समाप्तिमकुर्वत न कांची पत्तने स्वान्तनुमत्यजन्निति ।

(३) अपिच यतिधर्मसंग्रहप्रभृतिबहुग्रन्थप्रतिपादितसुप्रसिद्ध तीर्थाश्रमवनारण्यगिरिपर्वतसागर सरस्वती भारती पुर्याख्यदशविधसंप्रदायानेव श्रीशंकराचार्याः स्वशिष्येभ्योऽन्वग्रह्णन्नतः कामकोटिपीठाधिपतिभिरेवोपयुज्यमानेन्द्रसरस्वतिसंप्रदायोऽशास्त्रीय इतिच ।

(४) अथापि श्रीमच्छङ्करभगवत्पादाचार्यायतस्वयं स्थापित चतुः पीठाधिपतिभ्यः सुरेश्वराचार्य प्रभृति स्वशिष्येभ्यः प्रज्ञानंब्रह्म, अहंब्रह्मास्मि, तत्वमसि अयमात्माब्रम्हेत्येतानिसुप्रसिद्ध चतुर्विधमहावाक्यान्येवोपादिशन्नतोपि कामकोटिपीठ प्रवन्ध कर्तृभिरुच्यमानं ॐतत्सदित्येतन्महावाक्यं न भवतीतिच।

(५) प्रथमतः कांचीपत्तने प्रतिष्ठापितं पीठं पुनः कुम्भकोण पुरे समानीतं स्थानभ्रष्टं सत्कथं पूजर्हिं भवेदित्येत्रमादिविषयविचारव्रातयुतेभ्यश्चिरायेतः प्रागेव श्रीकाशीस्थैः सुप्रसिद्धः पण्डितैर्यतीश्वरैरथेतरक्षेत्रस्थ पण्डितप्रवरैश्च प्रकटित ग्रंथेभ्य उपरिष्टादुदाहृतान्विषयानाहृत्येहसंग्रहेणोदाहृत्य रुद्रापितः। इत्थंच, ‡ उपरिष्टान्निर्दिष्ट कारणतः श्रीकांञ्चीकामकोटि कुम्भकोणमठः श्रीमज्जगद्गुरु मठोनभवति। श्रीशृंगेरी, द्वारका, जगन्नाथ, बद्रीनारायण क्षेत्रेषु चतुर्षु श्रीमच्छंकरभगवत्पादाचार्यैस्संस्थापिता श्चत्वारो मठा एव जगद्गुरु मठा इति सिद्धान्तः सज्जनविधेयेनां विज्ञप्तिरिति।

संपादकौ,

१ प्रतापं सीताराम शास्त्री न्यायाचार्यः।

२ जयपुर गणपति विश्वनाथ शर्म्मा।

— ——

# विषय सूची ।

---

## ४८ वर्ष पूर्व जगद् विख्यात काशी के पण्डितों और संन्यासियों का प्रशंसनीय निर्णय ।

---

आदि शङ्कराचार्य द्वारा स्थापित
केवल चार ही मठ हैं ।

.........इदानीं चतुर्थी जिज्ञासा शिष्यते । तत्र पुरस्तादयमर्थो विचारपथमारोढुमर्हति । चातुर्वर्ण्यं यथायोगं वाङ्मनःकायकर्मभिः । गुरोः पीठं समर्चेत विभागानुक्रमेण वै । धरामालम्ब्य राजानः प्रजाभ्यः करभागिनः । कृताधिकारा आचार्या धर्मतस्तद्वदेव हि' इति शिक्षा यावद् गुर्वाचार्यविषयिणी मठचतुष्टयाध्यक्ष-मात्रविषयिणी वा । 'मठाश्चत्वार' आचार्याश्चत्वारश्च धुरन्धराः । सम्प्रदायाश्च चत्वार एषा धर्मव्यवस्थितिः इत्येतदव्यवहितोत्तरत्वान्मठचतुष्टयाध्यक्षमात्रविषयिणी चेत् कथमन्यस्य संन्यासिनश्चातुर्वर्ण्यमात्र-

समर्चितपादाम्बुजस्थानाचार्यभ्रान्तिदनामचिह्नधारण-पूर्वकं सञ्चरणं नानुचितं स्यात्।

नह्यराजा प्रजाभ्यो दण्डं जिघृक्षन् राजचिन्हेन गच्छन् न पापीयान् भवति। ननु भवतु यस्य कस्यचित् संन्यासिनस्तथागमनमनुचितम्। पीठाचार्यस्यैव तु कारणविशेषेण स्थानच्युतस्य स्थलान्तरमधिवसतस्तथा गमनमुचितमेवेति वाच्यम्। 'कृताधिकारा आचार्या धर्मतस्तद्वदेव हि। अस्मत्पीठे समारूढः परिव्राडुक्त-लक्षणः। अहमेवेति विज्ञेयो यस्य देव इति श्रुतेः।' इति परमगुरूक्तेः स्थानच्युते राजनि दण्डानधिकारदर्शने-नौचित्याच्च तस्यापि तथागमनमनुचितमेवेत्यवधेय-मित्यलम्।

व्यवस्थेयं रामाब्धिरत्नेन्दुमिते १९४३ विक्रमशाके माघशुक्लैकादश्यां शुक्रे समजनीति शिवम्।

॥ शुभमस्तु ॥

१—काशीस्थराजकीयपाठशालीयन्यायशास्त्राध्यापकः श्रीकैलासचन्द्र ( भट्टाचार्य ) शर्म्मा सम्मनुतेऽमुमर्थम्

२—उचितेयं व्यवस्थेति शिवकुमारशर्ममिश्रः ( श्रीकाशीस्थ-दरभंगामहाराजपाठशालाप्रधानाध्यापकः )

३—इयमर्थतः सम्मता व्यवस्था राममिश्रशास्त्रिणः काश्यां श्री १०८ ब्रह्मामृतवर्षिणीसभासम्पादकस्य

४—नवद्वीपपाठशालाध्यापकश्रीयदुनाथसार्वभौम ( भट्टा-चार्य ) स्य सम्मतिरत्र

५ - सम्मतिरेतदर्थे ज्योतिषीराजाजीशर्म्मणः

६—सम्मतिरत्र शोभारामशास्त्रिणः

७—सम्मतिरेतदर्थे काशीस्थपाठशालाध्यापकश्रीसंगमलाल-शर्म्मणः

८—सम्मतिरत्र श्यामाचरणशर्म्मणः

९—श्रीद्विवेदहरिनाथमनीषी विद्वदुक्तमसुमर्थममंस्त

१०—सम्मतिरत्र चतुर्धरोपनामकवैजनाथदीक्षितशर्म्मणः

११ —सीतारामशास्त्री

१२—सममान्ययमर्थः सांख्यशास्त्राध्यापकैः पं० वेचनराम-शर्मा

१३—श्रीदरभंगाप्रभुप्राप्तवेतनो मेहदलोपाव्हराजाराम-शास्त्रिशर्म्मा

१४—सम्मतिरत्रार्थे श्रीजयदेवशर्म्मणो मैथिलस्य

१५—सम्मतिरत्रार्थे श्रीदेवीदत्तशर्म्मणः

१६—अमृतशास्त्र्यभीष्टेयं व्यवस्था

१७ समम्मँस्तामुमर्थं श्रीमत्काश्मीरजम्बूप्रभृतिमहाराज-संस्थापितकाशिकभूपार्यपाठशालीयवेदान्ताध्यापयिता भागीरथीप्रसादशर्म्मा

१८—अत्रार्थे सम्मतिः पण्डितबद्रिनाथशर्म्मणः

१९—अत्रार्थे सम्मतिः श्रीशिवनन्दनशर्म्मणः

२०—अत्रार्थे सम्मतिः जंबुपुराधीशपाठशालाध्यापकपण्डित कालीदासशर्म्मणः

२१—सम्मतिरत्र द्वारकादत्तशर्मणः

२२—अत्रार्थे सम्मतिः पण्डितनित्यानन्दशर्म्मणः

२३—सम्मनुतेऽमुमर्थं रामाचार्यशर्म्मा

२४—श्रीकेशवशर्म्मा

२५—सम्मनुतेऽमुमर्थं जगन्नाथशर्म्मा

२६—मनीषिसम्मतेऽर्थे कृतसम्मतिकोऽनन्तरामशर्मा

२७—ऋग्वेदाध्यापकजगन्नाथशर्म्मा

२८—सम्मतिरत्रार्थे श्रीमुकुन्दशर्म्मणः

२९—नारायणदत्तशर्मा

३०—सम्मतिरत्रार्थे श्रीगिरिजादत्तशर्म्मणः

३१—अत्रार्थे संमतिः पण्डितशीतलाप्रसादशर्म्मणः

३२—सम्मतिरत्र पं० भवानीदत्तशर्म्मणः

३३ सममान्ययमर्थः सुधाकरद्विवेदिना

३४—सम्मतिरत्रार्थे पाठकोपाख्यश्रीयुगलकिशोरशर्म्मणः

३५—सम्मतिरत्र पण्डितविभवरामशर्म्मणः

३६—मिश्रोपनामकसुरसण्डनामनगराधिष्ठितराजसम्मा-
नित श्री फतुरीशर्म्मणोऽनुमतिरत्रार्थे

३७—सम्मतिरत्रार्थे जीवन्मुक्तस्य श्रीमनोहरशर्म्मणः

३८—सम्मनुतेऽमुमर्थं श्रीमैथिलगुरुदत्तशर्म्मा

३९—सममान्ययमर्थः श्रीदीनानाथशर्म्मणा

४०—सम्मनुतेऽमुयर्थं श्रीहरिवंशशर्म्मा

४१—सम्मनुतेऽमुमर्थं मैथिल श्री भैरवदत्तशर्मा

४२—सम्मतिरत्रार्थे श्रीसुरेश्वरशर्म्मणः

४३—सम्मतिः श्रीअभिरामशर्म्मणः

४४—कृतसम्मतिरिह श्रीमुक्तीशर्म्मा

४५ सम्मतिरत्रार्थे शिवनन्दनशर्म्मणः

४६—सम्मनुतेऽमुमर्थं भाऊशास्त्री

४७—अत्रार्थे सम्मतिः वेंकटरमणशास्त्रिणः

४८—अर्थममुं सम्मनुतेऽग्निहोत्री आत्मारामशर्मा गुर्जरः

४९—सम्यगियं व्यवस्थेति गुर्जराणां चतुरशीतिज्ञातीनाम-
ध्यक्षो वेणीशंकरशर्मा

७०—संमतिरत्रार्थे पौराणिकोपाह्वनानाशास्त्रिणः

७१—श्रीकाशीक्षेत्रस्थसंन्यासी शिवानन्दसरस्वती जानीमठ

७२—संमनुतेऽमुमर्थं नित्यानन्दसरस्वती स्वामी

७३—स्वामिब्रह्मानन्दसरस्वतीसंमतोऽयमर्थः

७४—वासुदेवाश्रमस्वामिनः संमतिः

७५—माधवानन्दस्वामो संमनुते

७६—कृष्णेन्द्रस्वामिनः सम्मतिः

७७—त्रिविक्रमाश्रमस्वामिनः समतिः

७८—हृषीकेशाश्रमस्वामिनः संमतिः

७९—मधुसूदनस्वामिनः संमतिः



शिवाय नमः

श्रीमदाचार्यपादेभ्यो नमः

कुम्भघोणनगरसमीपस्थकावेरीपत्तनाख्यग्रामवासिना विख्यातकीर्तिशेषितभट्टश्रीनारायणशास्त्रिणा कृत आचार्यचरित्रे विमर्शनाख्यो नाम द्वितियो भागः यथावदधस्तात् प्रकाश्यते सज्जनानां सुबोधाय---

तदादि तदा तदा तदानींतनानामासेतुशीतशैलमाकलितसंस्थानानां जनानाम् आब्रह्मशूद्रमखिलानाम्, अखिलीकृतानि मतानि, अनल्पितानि कल्पितानि, अदुष्प्रचारान् आचारान्, अदुरवस्थाः व्यवस्थाः, अविभाषाः परिभाषाः, असङ्कीर्णान् वर्णान्, अविस्मृतीः स्मृतीः, अनल्पश्रुतीः श्रुतीश्च कारयन्तः, संततमद्वैतमद्वैतमुद्वेलयन्तः, समुद्बोदयन्तश्च प्रबोधम्, आसुरेश्वरादाश्रितशृंगगिरिपीठा नित्य-

बोधघनप्रभृतयः नियमिशिरोमणयः परंपरीणाम् प्रजाधर्मरक्षामक्षीणमाचरन्तस्सन्ति । अत्रान्तरे गोत्राधिपत्यमुपेयिवत्सु परत्रत्येषु पाश्चात्येषु विजातिषु नृपतिषु, देशाद्देशमटन्तीः प्रकृतीः प्रतिषिध्य क्वचिदेव सनिर्ग्रन्थमवरुन्धत्सु सत्सु, द्विजादिषु च तथा निरुद्धेषु, विनष्टेषु, च वैदेशिकविबुधविवादेषु, कतिचन यतिवरास्तानवनिजानाश्रित्य, स्वयमपि शृङ्गगिरिपरम्परानुषङ्गिण इति वदन्तः, तेषामिव स्वेषामपि श्रीमुखानि प्रवर्तयन्तः, प्रजाः प्रलोभयन्तः ततस्तत इतस्संचरितुमारेभिरे। तदानीं तदानींतना नियमिनः केचित् कल्पितमपि स्वमनितरदेश्यमशृङ्गगिरिपरम्परीणमात्मीयमेवेति मठं अभिव्याहरन्तः, प्रसभमखिलमपि भगवत्पादविरुदजालमपहरन्तः, स्वयमपि शङ्कराचार्य इति महन्नाम समुच्चरन्तः, तदनुकूलमुद्रामुखानि सर्वतोमुखानि श्रीमुखानि सततमुपाहरन्तः, पीठमध्यात्मनामनादिमंत्रिकानुषङ्गिणमखिलजनाभिवन्द्यमाश्रितजनवितीर्णकामकोटिम् कामकोटिपीठमेव समुदाहरन्तः, प्रमाणग्रन्थप्रतिपादितानाम् वचसामधिक्षेपभूयिष्ठम् व्यवहरन्तः,

काञ्चीमधिसंचरितुम् उपाक्रमन्त । तदनु केनचित् कारणेन ततो निष्कासिताश्चोलानधिगम्य क्वचित् मरुद्वृधारोधसि कञ्चन मठमुदपीपदन् । तदादि यथा शृङ्गगिरिपरम्परीणाम्, निरूपितनिखिलविशेषतया वा, नियमिभूमिकतया वा, निखिलवशीकरणनिपुणतया वा, निस्तुलनामावहतया वा, निरूढमठतया वा, निचितबहुद्रविणतया वा, निर्मलचरिततया वा, निर्जितविवादितया वा, निर्वैदेशिकयोगतया वा, नृपाभिमततया वा, निरुपमविद्यतया वा, निरुपरोधितया वा, निस्सारतया वा, निष्पन्दतया वा, निरतिशयख्यातिविरहिततया वा, नैकटिकविद्वदभिमततया वा, नियमितवर्णाश्रमधर्मतया वा, निसृष्टभूरिभूरिदानतया वा, न जानीमहे कया वा निगूढनिजचरितास्सकलजनग्राह्यवचसः सुखमति चिरमविप्रतिपन्नमवसन् । अद्यत्वेऽतिबहुलतया वा पण्डितानाम्, अतिसुलभतया वा देशवृत्तावगमनानाम्, अत्यमर्षणतया वा परेषाम्, अनावदूकतया वा स्वेषाम्, अदक्षिणतया वा अध्यक्षाणाम्, अतिभिन्नतया वा मठमर्य्यादानाम्, अबाधिततया वा प्रकाशनानाम्,

अधिगततया वा प्राक्तनप्रबन्धानाम्, अपरिचिततया वा वशीकरणशक्तेः, अतिस्फुटतया वा निजागमस्य, अद्युम्नतया वा पुंजीकरणाय, अनभिमानतया वा तत्त्वदृशाम्, असाह्यतया वा विद्विदुषाम्, कया वा यथाचरितमखिलमपि चरितमतिविशदमभूदापण्डितमाप्राकृतमखिलस्य। तथा सत्यधुनापि मधुनेव पिण्डखण्डास्वादिनः, विधुनेव व्यजनवातसेविनः, शीधुनेव वनिताधरामृतपायिनः अन्धुनेव तृणाग्रतुषार तोषिणः, सिन्धुनेवान्धुदर्शनानन्दिनः कर्कन्धुनेव कक्षचयभक्षिणः, प्रत्यग्रसंशयाविष्टस्य विष्टपस्य तत्स्थैर्यसमुपष्टम्भकेन, अनन्तानन्दगिरीयोपधिना शङ्करविजयेन प्रमाणमात्मनामिति मुद्रापितेन मभसावि :—

"तमामूलाग्रमबद्धमितरप्रबन्धविरुद्धमलौकिकवैदिकसमयनिबद्धम् अतिविरुद्धमपि च मुहुर्मुहुः प्रवृद्धं च पश्यामः। तन्न सम्प्रतीमसम्प्रतीममनन्तानन्दगिरीयम्" इति विवादविशारदा वदन्ति तदिह संग्रहेण तैः प्रतिपादिताः केचन

विरोधास्तस्य परेषामपीहाधस्तान्निरूप्यन्ते —तद-वधीयताम् धीरधीभिः। यथा ननु शङ्करकथायाम् ज्ञेयभागाः पञ्च, ते यथा—

१. शंकरःक्वजातः ? कस्य ? कस्यामिति ?
२. क्व प्रथमः पीठ : ? कस्तत्र निहितः ?
३. कियदायुराचार्यणाम् ?
४. क्व ? कथं गतः परोचताम् ?
५. कति पीठाः ? क्वा तेनाक्रियन्त ?

इति तत्राद्यं विचारयामहे। शिवरहस्ये नवमांशे षोड़शाध्याये "केरले शशलग्रामे" इति देशस्य केरलत्वं, स्थलस्य शशलाभिधत्वमप्युक्तम्। शशलमिति कालट्या एवापरपर्यायः। माधवीये द्वितीयसर्गे प्रथमश्लोके "ततो महेशः किल केरलेषु" इति देशस्य प्राग्वदुक्तम्। तृतीयश्लोके "कालट्यभिख्योऽस्ति महान् मनोज्ञः" इत्यनेन कालट्यभिधानः कश्चित् अग्रहारः कथितः। तदिदमवतारस्थलमिति। जनकश्च तस्मिन्नेव सर्गे ७१ तम श्लोके—"लग्ने शुभे शुभयुते सुषुवे कुमार

श्रीपार्वतीव सुखिनी शुभवीक्षिते च । जायासती शिवगुरोर्निजतुंगसंस्थे सूर्ये कुजे रविसुते च गुरौ च केन्द्रे ॥"

इत्यनेन शिवगुरुरित्युपन्यस्तम् । ७२ तम श्लोके—

"दृष्ट्वा सुतं शिवगुरुः शिववारिराशौ"

इत्यादिना तस्य सन्निधिस्तदभिनन्दनं चोदितम् । तथैव शंकरविजयविलासेऽपि पंचमाध्याये चतुर्थश्लोके—

"विद्वत्ताम् केरलानां च पावनत्वविधित्सया"

इति देशः प्राग्वदुक्तः । तत्रैव षष्ठश्लोके—

"अलकेव पुरी यत्र कालटीति प्रतिश्रुता"

इति स्थलस्य तद्वदुक्तम् । तत्रैव ३९ तम श्लोके—

"प्रसूता तनयम् साध्वी गिरिजेव षडाननम्" ।

इति । ५२ तम श्लोके—"ततः श्रुत्वा पिता सोऽपि निधिं प्राप्येव निर्धनः ।" इति पितुस्सान्निध्यादेः पूर्ववदुपपादनमस्ति । तथैव नवमाध्याये चतुर्थश्लोके—

"जातोऽहम् केरले देशे श्रीमच्छिवगुरुद्विजात् ।
किशोरता दशायां मे तातो लोकान्तरं गतः ॥"

इत्यनेन च जननात् परमेव पितुरुरतत्वमवगम्यते तथा मणिमंजरीभेदिन्यामपि प्रथम सर्गे । ३ तम श्लोके—

"श्रीकालटीपत्तनवासिनो जनाः" इति कालटी प्रसक्तिः । प्रथमसर्गे ६२ तम श्लोके—"शिवगुरुरपि जायया समेतः" इति । ६३ तम श्लोके—

"तस्या गर्भपुटीपयोधिकुहरादाविर्बभूव स्वयम्" इति च । ६४ तमश्लोके—"ततः पितामुष्य च जातकर्म" इत्याद्युपन्यासेन जननकालेऽस्य पितुः सान्निध्यादिकमुक्तम् । इतिसत्यनन्तानन्दगिरेः परमपरः पंथाः, स यथा—

द्वितीयप्रकरणम्

श्रीचिदम्बरमवतारस्थलमिति पिताऽस्य विश्वजिन्नामाभसुर इति माता च विशिष्टाभिधेति सोऽपि सुशीलामपितां विहाय तपसे वनं ययाविति च ततः

"चिदम्बरेश्वर कृत्वा यजमानं द्विजोत्तमाः ।
तृतीयादिषु मासेषु चक्रुः कर्माणि वेदतः ॥

प्राप्ते तु दशमे मासि विशिष्टागर्भगोलकः ।
प्रादुरासीन्महादेवः शंकराचार्यनामतः ॥

इत्युपन्यस्तम् ।

अतितराम् इदम् न संगच्छत इति विदन्तु विद्वांस एव । आस्तामत्र शंकरकथाविरोधः प्रकरणे—पुराणादिविरोधोऽपि दृश्यते । तद् यथा—

"परन्तु क्षीणे पुण्ये लुप्तधर्मतया क्लेशभाजि कलियुगे" इत्यारभ्य कलिम् निरूप्य कतिपयैर्वचनैः वतस्तदुद्वीक्ष्य दूयमानमानसेन निजसूनुना समीरितस्सुरेश्वरः परमेश्वरमुपेत्य प्रकृतमुपश्लोकयामास । तदनु तदनुनयद्रुत मानसश्शंकरः

"ब्रह्मन् यथासुखं गच्छ सन्तुष्टोऽस्मि तवोक्तितः ।
शंकराचार्यनाम्नाहं संभवामि महीतले ॥"

इत्याद्युक्त्वा निधिं विसृज्य—

"ततः सर्वात्मको देवश्चिदम्बरपुराश्रितः ।
आकाशलिंगनाम्ना तु विख्यातोऽभून्महीतले ॥"

इत्युक्तम भवति । इदं शंकरसंहितायामुपदेशकाण्डे क्षेत्रप्रकरणे, सूतसंहितायां क्षेत्रखण्डे, सनत्कुमारसंहितायां मलयाचलखण्डे च पुण्डरीक-

पुरमाहात्म्ये च, व्याघ्रपुरमाहात्म्ये च कथितेन चिदम्बरमाहात्म्येन न संगच्छते, हालास्यमाहात्म्येपि-

"कृते षोडश लीलाश्च त्रेतायामपि षोडश।
द्वापरे षोडप तथा षोडशैव कलौ युगे॥"

इत्युपक्रम्य "या लीला लोकविख्यातास्तासां क्रम इहोच्यते" इति क्रमादुक्तासु कृतयुगलीलासु प्रथमासु षोडशस्वेकतमीं षष्ठीम् लीलामप्यवलोकयति पण्डितजने—

"कांचने सदसि ख्यातं तेन ताण्डवमनूवहम्।
दृष्ट्वाहम् नियमेनैव भोजनं च करोम्यतः॥" इति
"चिदम्बरम् हृदाकाशं विश्वरूपस्य वेधसः।" इति
"हृत्पुण्डरीकम् संप्रोक्तं पुण्डरीकपुरं त्वया।" इति
हृत्पुण्डरीकम् धातुश्च चिदंवरमितीरितम्, इति,

"सभापतिरहं तत्र प्रयच्छामि सदीप्सितम्"। इति च वचनानि भूयस्तराम् अधिगम्यन्ते। अतो यदुक्तमनन्तेन! कलेराविर्भावात् परमाकाशलिङ्गतामयासीदमृतांशुशेखर इति तदसमञ्जसम्। ननु कलाविति पदं प्रक्षिप्तम्। तत्पूर्वमेवेदमिति वाच्यम्।

तदुपन्यस्तानाम् तादृशामाचारभ्रंशानां कलेर्धर्मत्वेन व्यासेन महाभारतादिषूक्तत्वात् । अपि च शिव-रहस्ये नवमांशे षोडशाध्याये—

"कल्यादिमे महादेवि सहस्रद्वितयात् परम्" ।

इति भगवत्पादाचार्याणामवतारकाल उक्तः तदेतेनापि तत्पूर्वमेव कलौ भाव्यम् अपि च खण्डनकारश्री-हर्षेणापि शंकरस्य तात्कालिकत्वसिद्धेस्तद-संगतमेवेति बोध्यम् ।

अथ द्वितीयमवगाहामहे—

शिवरहस्ये नवमांशे षोडशाध्याये—

"दुर्वासःशापतो भूमौ जातां वाणीं विजित्य ताम् ।
अगस्त्यचरिते देशे तुंगातीरे सुनिर्मले ॥
पुण्यक्षेत्रे द्विजवर स्थापयित्वा सुपूजय ।
यत्रास्ते ऋष्यशृंगस्य महर्षेराश्रमो महान् ॥
कलावपि ततोऽद्वैतमार्गः ख्यातो भविष्यति ॥"

इत्यत्र ततः पदस्य तत्र पीठोत्पादनेनैवेत्याशयः । तदस्य शृंगगिरिपीठस्य प्रथमतोक्ता शंकरविजय-विलासे—२४ अध्याये १८ तमश्लोके—

"सद्योगकरणासक्ते लग्ने महति पूजिते ।
वाणीस्थापनमातिष्ठ(त्यस्मिन् देशिकपुंगवे ॥"

इत्यारभ्य तदभ्युदयसूचकानि कतिचन शुभनिमित्तानि कथयित्वा —३१तमश्लोके—

"इत्थं विचार्य चतुरः श्रीमान् देशिकचन्द्रमाः ।
वाग्देव्याः सविधे नित्यं गोपुराट्टालशोभितम् ॥
श्रीमठं तत्र निर्माय विद्यापीठमचीक्लृपत् ।
चतुर्ष्वेकं वावदूकं सुरेशाचार्यमग्रिमम् ॥
ब्रह्मविद्यावरिष्ठं तं तत्पीठे विनिवेश्य सः ।
आजिज्ञिपत् सुरेशार्यमित्थं देशिकपुंगवः ॥
यस्त्वद्वैतमते स्थित्वा भारतीपीठनिन्दकः ।
स याति नरकं घोरं यावदाभूतसंप्लवम् ॥
आसेतुहिमवच्छैलं सदाचारान् विचारय ।
यत्र स्खलति यः को वा विप्रस्तं शिक्षयाधिकं ॥
संप्रदायान् दशैवैतान् शिष्येष्वारचय स्वतः ।
( तीर्थाश्रमवनारण्यगिरिपर्वतसागराः ।
सरस्वती भारती च पुरीत्येते दशैव हि )
शिवात् क्रमात् समायात चन्द्रमौलीश्वरं परम् ।
रत्नगर्भं गणपतिं पूजयेति ददौ मुदा ॥
कारयामास तेनैव स्वीयभाष्यार्थवार्तिकम् ।

सविधे निवसन्नेव शरदो नवपंच च ॥
वाग्देव्याः पूजनं कुर्वन् अवसत्तेन तन्मठे ।
मलहानिकरं देवं प्रत्यहं पूजयन् सुधीः ॥"

इत्यत्र श्रृंगगिरौ वाणीस्थापनम्, पीठप्रतिष्ठा, सुरेश्वरस्थापनम्, तत्रत्य लिङ्गरत्नगर्भगणपत्योः साक्षादीश्वरादागमनं च, तन्मठस्य, तत्पीठस्य, तद-धिष्ठातुश्च सर्वेभ्योऽप्यभ्यर्हितत्वमप्युपन्यस्तम् । मणिमंजरीभेदिन्यामपि ३ सर्गे ५० तमश्लोके—

"तथा भवत्वित्थमुदीरयन्तीम् नीत्वा वियत्येव यतीश्वरोयम् ।
श्रीशृंगपुर्यास्सविधे सुचक्रं निर्माय तस्मिन् विदधे प्रतिष्ठाम् ।

इत्यनेन श्रृंगगिरौ वाणीस्थापनम् । ६३ तमश्लोके—

"स द्वादशाब्दं गुरुरत्रपीठे स्थित्वानवद्यामुपदिश्य विद्याम्" इति स्वेनैवाधिष्ठितत्वमुक्तम् । तदनु सुरेश्वर-मस्थापयदिति गम्यते । नन्वत्रैव "श्रीपद्मपादं च निधाय तत्र जगाम कांचीपुरमन्यशिष्यैः" इति दृश्यते तदत्र सुरेशो न स्थापितः पद्मपाद एवेति वाच्यम् । चतुर्थसर्गे—

'इत्याज्ञामथ परिगृह्य मण्डनार्यः
शिष्यैः स्वैः पुरवरशृंगशैलमेत्य ।

अद्वैतामृतमहदब्धिमध्यनियं-
त्साराढ्यम् सपदि ततान वृत्तियुग्मम् ॥
तत्रैवं कतिचिद्दिनानि निवसंच्छ्रीमान् सुरेशो गुरुः ।
शुद्धाद्वैतमतप्रवर्त्तनपरैः शिष्यैरनेकैर्वृतः ॥
तत्रैक किल नित्यबोधसुघनाचार्याख्यमेतन्मठे
पीठाध्यक्षमथारचय्य स ययौ तूर्णं गुरोः सन्निधिम् ।"

इत्यत्र सुरेशस्य नित्यबोधघनस्थापकत्वेनोक्तत्वात् तस्य तत्पीठाधिपतित्वस्य, 'तूर्णं' शब्दस्वारस्यात् व्यंग्यया गुरुविरहासहतया पद्मपादमात्ममठरक्षणाय निधाय पूर्वमाचार्यमनुगतवान् इत्यर्थस्य च प्रतीयमानत्वात, तथा च श्रीजगद्गुरुपरम्परायाम् —

"सुरेश्वराचार्ययोगी नित्यबोधघनाभिदः" इत्यनेन सुरेशात् परं नित्यबोधघन इत्युक्तम् । तथा च मठाम्नाये—

"तुरीयो दक्षिणस्यां च शृंगेर्यां शारदामठः ॥
मलहानिकरं लिंगं विभाडंकसुपूजितम् ।
यत्रास्ते ऋष्यशृंगस्य महर्षेराश्रमो महान् ॥
वराहो देवता तत्र रामक्षेत्रमुदाहृतम् ।
तीर्थं च तुंगभद्राख्यं शक्तिः श्रीशारदेति च ॥

आचार्यस्तत्र चैतन्यब्रह्मचारीति विश्रुतः ।
वार्तिकादिब्रह्मविद्याकर्ता यो मुनिपूजितः ॥
सुरेश्वराचार्य इति साक्षाद् ब्रह्मावतारकः ।
सरस्वती पुरी चेति भारत्यारण्यतीर्थकौ ॥
गिर्याश्रममुखानि स्युः सर्वनामानि सर्वदा ।
संप्रदायो भूरिवालो यजुर्वेद उदाहृतः ।
अहं ब्रह्मास्मीति तत्र महावाक्यमुदीरितम् ।"

इत्यनेन च सुरेश्वर एव भगवत्पादैः शृंगगिरौ स्थापित इति सिध्यति । तेषां प्रबन्धे परमपरमयत्नम् । तद् यथा—६२ प्रकरणे—

"तत्रैव परमगगुरुर्द्वादशाब्दकालम् विद्यापीठे स्थित्वा, बहुशिष्येभ्यः शुद्धाद्वैतविद्यायाःसम्यग्गुरूपदेशं कृत्वा, तदनन्तरम् पद्मपादाख्यम् कंचित् शिष्यं पीठाध्यक्षं कृत्वा भोगनामकलिंगमेतत्पीठे निक्षिप्य स्वयं निश्चक्राम"

इत्यारभ्य कांचीगमनम्, नगरालयादिनिर्माणं, ताम्रपर्णीतीरादागतानाम् परिभवं च समुपन्यस्य, कामाक्षीमहिमप्रपंचमपि प्रपंच्य—६५ प्रकरणे—

"अतः सर्वेषां मोक्षफलप्राप्तये दर्शनादेव श्रीचक्रं भवतीति भगवद्भिराचार्यैस्तत्र निर्मितम् तस्मान्मुक्ति-

कांचिभिः सर्वैः श्रीचक्रपूजा कर्तव्येति निश्चित्य, तत्रैव निजावासयोग्यं मठमपि परिकल्प्य, तत्र निज-सिद्धान्तपद्धतिं प्रकाशयितुमन्तेवासिनम् सुरेश्वर-माहूय, योगनामकं लिंगं पूजयेति तस्मै दत्वा, त्वमत्र कामकोटिपीठमधिवसेति व्यवस्थाप्य, शिष्य जनैः परिपूज्यमानः परमगुरुः सुखमुवास"। इति च तदनु ६८ प्रकरणे—

"तदनु सकललोकैकसाक्षी चैतन्यानुभविष्य-द्वर्तमानकालः परमगुरुः स्वतन्त्रपुरुषः शुद्धाद्वैत-विद्यानिष्ठागरिष्ठान् सेतुहिमाचलमध्यदेशस्थान्, अशे-पान् ब्राह्मणादीन् कृत्वा तदीयसेवांगीकारसमर्थाम् निजशिष्यपरम्पराम् आकल्पम् कांचीपीठादि तत्पदस्थायिनीं कृत्वा तन्मुखादेव सकलशिष्येभ्यो मोक्षमार्गोपदेशं कल्पयित्वे" त्यादि च लिखितम्। अन्येत्र सुरेश्वरमुदाहरन् । अत्र परं पद्मपाद कथितः । तिष्ठतु, अत्र प्राक्तने वाक्ये, कांचीनगरे च, निजावासयोग्यं मठमपि परिकल्प्य सुरेश्वरं काम-कोटिपीठमधिवसेति व्यवस्थाप्य, परमगुरु-सुखमुवासेत्यनुषंगेण, 'अपि'शब्दस्वारस्याच्च आत्म-

वासार्हमन्यं कंचन मठमुत्पाद्य, सुरेश्वराय कामकोटिपीठाधिपत्यमर्पयित्वा, स्वयं स्वमठे सुखमुवासेत्यर्थो लभ्यते । अन्येषां यतीनां मठ इव भगवत्पादानामपि तत्र मठः समभवदित्यत्र न विवदामः, सामान्यतो यतिनिवासानां मठ इति व्यवहारस्य विश्वदृष्टत्वात् । स मठो न श्रृंगगिर्यादिष्विवाधिपत्यसहित इति वयमुदाहरामः । मानाभावात् सुरेश्वरस्य च कामकोटिपीठाधिवासः कथमिति सिध्यति ? तद्ग्रंथरीत्यैव कामाक्ष्याः—

"चिद्रूपिणी ब्रह्मविद्या रुद्रशक्तिः गुहावासिनी"

इत्यादिना महिमा प्रपंचितः सा च कामकोटिपीठगतेत्यस्य प्रमाणानि बहुशः सन्ति तत्र च मूकोपि—

"कामपरिपथि कामिनि कामेश्वरि कामपीठमध्यगते ।
कामदुघा भव कमले कामकले कामकोटि कामाक्षि ॥"

इत्युपश्लोकितवान् । नन्वाचार्या ग्रंथान्तरे तामावाहयान्नतो न दोषः पीठाधिवासेनेति वाच्यम् । तत्प्रबन्धगतेनैव—

"साप्युपासकानां फलदा कल्पवल्लीव समभव-

दिति" वाक्यान्तर्गतेनापिशब्देन पीठगताया अपि सूचनात् । अतः, स्वेनापि स्वाचार्यैरपि सुरशेखरैरपि वन्दनीयवैभवे देवतात्मनि तावति महति पीठे कथमेष सुरेश्वरः कृतपदस्तिष्ठतिस्मेति चेपिष्ठमिदम् । तत्तत्र मठद्वितयमप्यश्रद्धेयमेव । अपि च, हन्त पश्यानन्तानन्दगिरेः स्मृतितन्त्रनैपुणमत्र । यत्र—"पतिसन्यासात् पूर्वमेव वैधव्यभयात्" इत्यादिसरसवाणीवाण्यां जिते मण्डने विवादाय समाह्वयति च यतिशेखरे लिखितमस्ति । न जाने पत्यौ प्रव्रजति प्रमदानां वैधव्यमुपनमेदिति । स्मृतयोपि तथा वैधव्यस्य तदानीमवकाशं न वितरन्ति । लोकेपि पत्यौ प्रव्रजिते न वैधव्यमनुतिष्टन्ति नार्यः । इति स्मर्तुरनन्तस्य गिरेराशयः कीदृगिति न जाने । सुदिनमिदं यदि माम् पंक्तिमद्यावालोकिषि ।

ततः पदान्तरमवतरामः—

कियदायुराचार्याणामिति । शिवरहस्ये नवमांशे १६ अध्याये—

"द्वात्रिंशत् परमायुस्ते शीघ्रं कैलासमावस" इत्युपन्यस्तम् । माधवीये सप्तमसर्गे ५५ तमश्लोके—

"अष्टौ वयांसि विधिना तव वत्स दत्ता-
न्यन्यानि चाष्ट भवता सुधियाऽऽर्जितानि ।।
भूयोऽपि षोडश भवन्तु भवाज्ञया ते
भूयाच्च भाष्यमिदमारविचन्द्रतारम् ।।"

इति १६ सर्गे ९६ तम श्लोके—

एवंप्रकारैः कलिकल्मषघ्नैः ।
शिवावतारस्य शुभैश्चरित्रैः ।।
द्वात्रिंशदत्युज्ज्वलकीर्तिराशेः ।
समा व्यतीयुः किल शंकरस्य ।।"

इति चोक्तम् । एभिर्भगवत्पादानामायुर्द्वात्रिंशदिति सिद्धम् । अनन्तानन्दगिरेः परमन्यादृशः पंथाः । तद् यथा—

"इति ब्रह्मवचःश्रुत्वा व्यासः काशीकृतालयः ।।
करेणानीय गंगाम्बु जीवेत शरदां शतम् ।
इत्युक्त्वा प्रोक्षयामास शंकराचार्यमुत्तमम् ।।"

इत्युपन्यस्तम् ।

अत्र परावरज्ञे पाराशर्ये स्वयं शरदां शतममुष्य पुरुषायुषमभिहितवति स एष द्वात्रिंशति तिरोधादिति चेत् । तदाचार्याणां मुनिवचनतिरस्कारिता पाराशर्यस्य मिथ्यावादिता च सिध्यत इत्यलमलं महता-

मपि महादोष आरोपयद्भिरीदृशैरुदितैरित्युपरम
परमः पण्डितानाम् ।

अतस्तुर्यां शालां प्रविशामः—

"क्व कथं गतः परोच्यतामिति" । शिवरहस्
नवमांशे शोडषाध्याये—

"तान्वै विजित्य तरसाक्षतशास्त्रजालैः
मिश्रांस्ततो नैजमवाप लोकम् ।"

इत्यत्र मिश्रान् गौडान् इत्यर्थो बोध्यः । गौडाना
मेव मिश्रा इति विरुदस्य सर्वजनीनत्वात् । अतो गौ
डान् विजित्य कैलासमापदित्यर्थः अतः काश्मीरे सर्वज्ञ
पीठाधिरोहमारचय्य सशरीरः कैलासमगादित्याकूतम्
"मिश्रान्स कांच्यामथ सिद्धिमाप" इति पाठेपि न काि
हानिरस्य राद्धान्तस्य, तद् यथा—सिद्धिशब्दो न मोक्ष
वाचकः कुतः ? शक्तेर्मानाभावात्, न लक्षणा मुख्यार्थ
वाधाभावात् । न व्यञ्जना मूलाभावात् । अतः साध
नार्थः, कांच्यामपि सर्वज्ञपीठाधिरोहस्य कैश्चिदुक्तत्वात
तद्रूपस्य मनोरथस्य सिद्धिमवाप इत्यर्थः । अस्यैव
विस्तरो माधवीये १६ सर्गे ८६ तमश्लोके यथा—

"इत्थं निरुत्तरपदां सविधाय देवीं
सर्वज्ञपीठमधिरुह्य ननन्द सभ्यः।
संभाजितो भवदसौ विबुधैश्च वाण्या
गार्ग्यां कहोलमुखरैरिव याज्ञवल्क्यः।"

इत्युपक्रम्य वदरिकाश्रमगमनम् निरूप्य—

'इन्द्रोपेन्द्रप्रधानैस्त्रिदशपरिवृढैः स्तूयमानः
प्रसूनैर्दिव्यैरभ्यर्च्यमानः सरसिरुहभुवादत्तहस्तावलंबः।
आरुह्योक्षाणमग्र्यं प्रकटितसुजटाजूटचन्द्रावतंसः
शृण्वन्नालोकशब्दं समुदितमृपिभिर्धाममैजं प्रतस्थे॥'

इति १६ अध्याये १०७ तमश्लोके उक्तम्।
गिरेस्तु तृतीयः कोपि पन्थाः। तद् यथा—

'स्व लोकं गन्तुमिच्छुः काञ्चनगरे मुक्तिस्थले कदाचिदुपदश्य स्थूलशरीरं सूक्ष्मेन्तर्धाय सद्रूपो भूत्वा, सूक्ष्मं कारणे विलीनं कृत्वा, चिन्मात्रो भूत्वाऽङ्गुष्ठपुरुषस्तदुपरि पूर्णमखण्डमण्डलाकारानन्दं प्राप्य सर्वजगद्व्यापकम् चैतन्यमभवत्॥"

इति। आस्ताम्। 'कांचीपुर' इत्यनेन तदितरग्रन्थसंदर्भविरोधः। अत्र "स्वं लोकं गन्तुमिच्छुः" इत्यादौ "सर्वव्यापकम् चैतन्यमभव" दित्यन्ते सर्वव्यापकचैतन्यमभवदिति प्रथममीप्सितस्य साधन

मुक्तम्, उद्दिष्टमात्मलोकगमनम् । सर्वव्यापकचैतन्यस्य स्वलोकः परलोक इति भिदास्तीत्यलमद्वैतमतवैशारद्येः गिरेः । अपि च केचिदाधुनिकाः कांचीपुरस्थं कस्यापि कर्मन्दिनो वृन्दावनमाचार्याणां इति वदन्ति। तद् गिरिवचनेनापि न सिद्ध्यति । तेन, स्थूलस्य सू.मानुप्रवेशस्य सूक्ष्मस्य कारणानुप्रवेशस्य चोक्तत्वात्। यद्वा, उपविश्येत्युक्तं खलु गिरिणा तदुपवेशस्थलमेव वृन्दावनमचीक्लृपन्निति चेत् । तद् अवैधमित्यलमनेन ।

तदन्यतः परिक्रमामः ।

कति क्व प्रतिष्ठिता मठा इति—मठाम्नाये—

"दिग्भागे पश्चिमे क्षेत्रं द्वारकाकालिकामठः ।
द्वितीयः पूर्वदिग्भागे गोवर्द्धनमठः स्मृतः ॥
उत्तरस्यां श्रीमठः स्यात् क्षेत्रं बदरिकाश्रमम् ।
तुरीयो दक्षिणस्यां च शृंगेर्यां शारदामठः ॥"

इत्युपन्यासेन चतुर्णामेव मठानामस्तित्वधीरुत्पद्यते । अन्ये तु गगनकुसमस्तवका इव, गन्धर्वनगरसौधा इव, मरीचिकापूरतरंगा इव, मानुषविषाणचषकपरा इव, शशशिशुशफा इव, शिरीषशिफा इव

च प्रमाणप्रबन्धैः निरूप्यन्तेतरामाचार्यस्थापिता इति मठाः । अनन्तस्तु आसेतोराच शीताचलादतिप्रथितप्रभावमद्वैतमतरत्नरत्नाकरमखिलविबुधजनसम्मतमवनिपालशतकृतसभाजनसभाजनान्वितमशेषजनवन्दनीयमादिमाचार्यनिर्विशेषनियमिपरिवृढपरिकर्मितममलं ऋष्यशृंगाश्रमस्थं शृंगगिरिमपलपितुमनलम्, आचार्यविनयर्यमन्त्रेण कृतकृत्यंमन्यस्तमतिनिर्बन्धेन कथयित्वा, प्रागुक्तसरणौं कंचन कांचीपुरगत इत्यपूर्वमश्रुतमज्ञातमदृष्टमाचार्यमठमकथयत् । तदश्रद्धेयमिति पूर्वमेवोक्तम् । अन्यच्चेदम्—"इन्द्रसंप्रदायवर्तिनं सुरेश्वर"—इति ७४ प्रकरणे गिरिराह तदभिदस्संप्रदायः न संप्रदायादादीयते, न वैद्यनाथदीक्षितीये विद्यते, न मठाम्नायेनाम्नायते, न शंकरविजयेषु विलोक्यते, न मठसंप्रदायेषु गण्यते, न विश्वेश्वरस्मृतौ दृश्यते, न यतिधर्मप्रकाशिकायां प्रकाश्यते, न रामानन्दीयेनाभिनन्द्यते, तदेष झषपयोधरपयःपूर इव, जन्तुफलप्रसवसर इव, पीतोत्पलप्रभिन्नवर्णवांध्येयमन्दस्मितांकुर इव, कुहूतुहिनकरकरनिकरक्षरदिन्दुकान्त-

सलिलशीतल कल्पान्तत्रियामायामोत्कर इव सुत
मभिनन्द्यो भवति । तदेष संप्रदायो नवीन इति,
तत्प्रबन्धप्रबन्धापि, न भवगत्पादपादसेवनावाप्त
वद्यविद्यावैशारद्याः पूज्यपादास्तत्र भवन्तः स्तो
कार्याः । अस्त्यत्र सूचनमनन्तानन्दगिरिरित्यनन
पदम्' नेदमाचार्यान्तेवासिभिरानन्दगिरिभिरारचिते
भाष्यव्याख्यानेषु क्वापि दृश्यते—अपि च म
मंजर्यादिकथितकथाछायाश्रयणेन च—अन्तरान्त
प्रतीपमतसूचनेन च, अश्राव्य पदशय्यया
कोप्ययमतिप्रतीपमतः शुद्धाद्वैतमतसिद्धान्तमाकुल
चिकीर्षुरिमम् प्रबन्धमचीकरदिति प्रज्ञाधनैः अ
मीयते ।

सकलभुवनैकमंगलशकरगुणवर्णनप्रवृत्तंन
नस्मरणीयाः कुधियो लोकायतिका इव प्रतरयेन" इति

नीलकंठोक्तरीत्या प्रबन्धोयमाचार्यमतम
निरतानामद्वैतिनामवलोकनपदवीमपि नार्हति, य
विवदितमेतद् अधिकृत्य तत्सर्वमभ्युपेत्यन्या
नेति न्यायविदो विदांकुर्वन्तु, ततस्सचादावु

यतिवराणाम् प्रमाणप्रबन्ध.—परम् विमृशन्तु विमर्शशीला विज्ञाः ।

अपि चेदम् शंकरमभ्यर्थयामहे यथा—

असंकीर्णान् वर्णान् अतुलजयमद्वैतसमयम् ।
अकुण्ठामुत्कण्ठामपि च, भगवत्पादपदयोः ॥
सुतुंगश्रृंगेरीवसतिरिह विश्वस्य वितरन् ।
विधत्तामायत्तामत्रनिधुरमाचार्यतिलकः ॥"

इति श्रीमेधादक्षिणास्यकृपासमासादितसकलकलाविलासश्रीमन्मिश्रजयिश्रीमत्कौण्डिन्यकुलतिलक - श्रीमहादेवदीक्षितेन्द्रवंश्यश्रीमदहिपतिफणितनिष्णातकुम्भकोणनगरकमलाकरकलहंसश्रीरामस्वामिशास्त्रिणाम् तनुजेन सकलाधुनिककविकुलतिलकेन भट्टश्रीपदलांछनेन नारायणशास्त्रिणा विरचितमाचार्यचरितविमर्शनम् संपूर्णम् ।

---

## श्रीकांचीकामकोटिपीठकुम्भकोणमठ के कुछ अनुयायियों को श्रीकाशी में नि प्रकाशिका----

* ( १ ) "श्री जगद्गुरु शंकराचार्य-चरित्र शीर्षक पुस्तक जो तिरुकोटीकावल, पोस्ट नरसिंग पेट निवासी पण्डित रामस्वामी उपाध्याय ( मठ के भूतपूर्व कार्यकर्ता ) से रचित व प्रकाशि और वि० एल्० पावगी हितचिन्तक प्रेस, रामघा बनारस सिटी, द्वारा सन् १९१५ ई० में मुद्रि पुस्तक के पृष्ठ ११ में लिखा हुआ है :—

"इसी कामकोटि पीठस्थ को श्रीमज्जगद्गु ऐसा नाम रहे दीगर पीठस्थों को श्री गुरु शंकराचा ऐसा रहे, पीठों के नाम नीचे लिखे अनुसार—

( १ ) कांची—कामकोटिपीठ
( २ ) शृंगगिरी—शारदापीठ
( ३ ) द्वारका—कालिकापीठ
( ४ ) बद्रीनारायण—पूर्णगिरिपीठ
( ५ ) जगन्नाथ—विमलापीठ

ये पीठ मुकर्रर कर वहां वहां के साम्प्रदाय नीचे लिखे माफिक—

( १ ) कांची कामकोटिपीठ

आम्नाय—मौलाम्नाय मठ—शारदामठ
वेद—ऋग्वेद साम्प्रदाय—मिथ्यावार
आश्रम—इन्द्र सरस्वती महावाक्य—ॐ तत्सत्

( २ ) शृंगगिरि शारदापीठ

वेद—कृष्णयजुर्वेद संन्यासनाम—भारती
महावाक्य—अहं ब्रह्मास्मि

( ३ ) बद्रीनारायण—

वेद—अथर्वणवेद सन्यासनाम—गिरी
महावाक्य—अयमात्मा ब्रह्म

( ४ ) द्वारका मठ

वेद—सामवेद सन्यासनाम—आश्रमी
महावाक्य—तत्वमसि

( ५ ) जगन्नाथ मठ

वेद—शुक्लयजुर्वेद सन्यासनाम—अरण्य
महावाक्य—प्रज्ञानं ब्रह्म

* ( 2) **Shankaracharya Chandra sekarendra's coming visit"** Pandit A Chinnaswami Sastry, professor of Mima sa, College of Oriental Learning, Benar Hindu university writes in the Leader July 19th 1934—

"The Kamakotipita math was fir established by Sri Adi Shankarachar at Sri Kanchi(now known as Conjeevaram chinglepet district, Madras Presidency about the year 490 B. C. i e. some 24 years ago, after his conquest througho India over the then existing religions, Jains, Budhists etc, and after establishi four Muths for the propagation of Advai doctrine at Sringeri, Badrinath, Dwark Puri...As the founder and first occupa of the Gaddhi of the Kamakotipita made conjeevaram his central seat for t rest of his life on earth in human fo and placing in his puja the first and fo

most of the five Lingas he had brought from kailasa viz., the Yoga* Linga. and also Sri in the form of Meru* the central seat of Maha Tripurasundari, he made his puja everyday and thus resolved to spend last years of his human life.........Sri Adi Sankaracharya left the human body at Conjeevaram in his thirtysecond year i.e., 477 B. C."........

* ( ३ ) १० सितम्बर '३४ ई० के स्थानीय 'पण्डित पत्र' के पृष्ठ ३ पर श्रीयुत पं० व्यंकटेश शास्त्री जी द्रविड़ बी० ए० के नाम से "जगद्गुरु जी से मेरी मुलाकात के संस्मरण" शीर्षक एक लेख प्रकाशित हुआ है जिसमें वे लिखते हैं कि—

"भगवान श्री आद्य--शंकराचार्य जी द्वारा संस्थापित प्रथम पीठ कांची कामकोटि के वर्तमान-अधिपति जगद्गुरु श्री शंकराचार्य जी महाराज के अनेकानेक कीर्ति—कलाप मेरे कानों तक आकर दिन-दिन मुझे औत्सुक्य—विह्वल बना रहे थे" ।

---

* जिनकी चोरी हो जाने की प्रसिद्धि हो गयी है ।

* इस प्रकार के वादास्पद लेख कई जगह प्रकाशित हैं ।

# A Candid Opinion of a well know Citizen of Benares

## AN EMINENT SANYASI

1. Rai Sahib S.P. Sanyal. Writ in the Leader of cctober 6th. 1934.

"Sanyas is the last stage of a Hindu life, so say the Shastras. Nowhere in th world except India is there to be foun such an immense body of men who hav renounced the house-holder's life an entered the Sanyas Ashram or the life o renunciation. In these ranks there hav been some of the most eminent of scholars Unquestionably Shree Shankracharya is the greatest name in this order during the post Buddhistic period of Indian History. He was believed to be an incarnation of the Lord Shiva; his birth was foretold in several Puranas, reputedly

written long before his birth. Even if one is not prepared to accept the incarnation theory, Shree Shankracharya shows by his life that he was the rare efflorescence of his age the like of whom India has not yet produced. At the age of eight, when he took Sanyasam, he had studied all that could be read; at the age of sixteen he had written most erudite works on the Hindu Philosophy which to this day are the wonder of Sanskritists of the East and the West; at the age of thirtytwo, when he had thoroughly revived and consolidated Brahmanism after its set-back by Buddhism, Jainism, etc, he died.

Broadly speaking there are ten classes of Sanyasis, popularly known as Dasnami. According to authoritative texts such as Shanker Vijaya Vilas, Yati Dharma Nirnaya, Visheshwar Smirti and others, they ara Teertha, Ashrama, Vana, Aranya

Giri, Parvata, Sagara, Saraswati, Puri and Bharati. These seem to be the only orders of Sanyasis recognised by text writers and no others. Shree Shankaracharya enjoined his disciples, particularly Shree Sureshwaracharya, the most learned of his four disciples, who was in his earlier life known as Mandan Misra, to whom and whose wife Saraswani the greatest Sanyasi in Kali gave Sanyasam after winning them by force of his arguments to preach the Advaita philosophy. Shree Shankaracharya laid down the rules of Sanyasi living and gave a real impetus to Vedic religion. He belonged to the order of Bharati Sampradaya. His first disciple was Sanandan, to whom on conversion he gave the name of Padma Padacharya. The other two disciples were Totaka or Anandagiri, and the deaf mute Hastamalaka or Prithividhara.

The protagonist of Sanyas, Shree Shankaracharya, himself, established four sacred seats ( Peethas ) of learning and devotion for Sanyasis in the four quarters of India, placing in charge of each Math ( sanctuary ) one of his four disciples named above, of whose advent the puranas- Linga Kurma, Vayu, Bhavishya and Markandeya—had foretold. The four Peethas and Mathas are as under :—

| | Peetha | Matha |
|---|---|---|
| North | Purnagiri or Badari | Jyotir |
| East | Bimala or Puri | Gowardhan |
| South | Sharada or Bharati | Shringeri |
| West | Kalika | Sharada or Dwarika. |

To each of these sacred seats he allotted one of four Vedic Maha—Vakyas· the basic formula for realisation of the oneness of Jivatma and Parmatma—the crux of the Advaita doctrine which the great master propounded during his life and which his immortal work will do on proclaiming for all time to come.

These four peethas and Mathas are, however, not the only institutions of their kind in India. As a multitude of Sanyasis so a plethora of Peethas and Mathas. In the south their number is galore. Besides these four the Kanchikama-koti matha claims to be the fifth founded by Shri Shankar. The present occupant of the Kamkoti pitha is Jagadguru Swami Shree Chandra Shekharendra .Saraswati Maharaj. His Holiness is a scholar of great repute. His eloquence, grace of style, power of expression and diction keep his audience

spell-bound. I hear he is the first Mathadhipathi of a well-known peetha who has undertaken an All-India tour by land marching from stage to stage. He is now approaching holy Kashi from prayag; and such is his veneration for this holiest of holies that he is coming all the way from Allahabad to Benares on foot in this rainy season. All joy and success to him. A strong reception committee has been formed at Benares to give his holiness a right royal welcome. Its president is His Highness the Maharaja of Benares and its Honorary Secretary Rai Saheb Madho Ram Sund, a local silk merchant.

That our popular Kashi Naresh should have consented to take this part is nothing to be wondered at. His orthodox ruling house has always been conspicuous in doing honour to scholars, ascetics and other holy men. Pandit Madho Ram Sund

is to be congratulated upon his display of energy in organising a committee to welcome the holy visitor to sacred Kashi.

In this connection I hear overzealous partisanship has unfortunately given rise to controversy and faction amongst a section of people in the city. An attempt is, however, being made to smooth the differences.

———

# POSITION OF KANCHI MATH.

Rai Saheb S. P. Sanyal writes in the Leader of October 12th 1934:—

"Anent the visit of the present Jagadguru Sree Shankaracharya of the Kanchi Kamakoti Peetham I referred in my previous communication to a controversy and a faction at Benares. The admirers and adherents of Kanchi Matham claim for it the unique position of being supreme in India and assert that the Kanchi Matham is the only institution the director of which is entitled to be designated Sree Jagadguru Shankaracharya, while the heads of the other four institutions cannot aspire to anything higher than the title of Sree Shankracharya. Needless to say that this exaggerated and fanciful claim on behalf of the Kanchi Peetham finds no support in any authorita-

tive text books. The works relied upon in the publication of 1931, entitled "Sree Shankaracharya and His Kamakoti Peetha" by Mr. N. K. Venkatesam Pantulu, are availed of to bolster up the claim of the Kamakoti Peetha in the following words :—

"When he ( Sree Shankara ) had thus established the central math at Conjeevaram which even today ranks as one of the Saptapuris and one of the seven Sakti Peethas and one specially of the three most eminent of such seats— the Kamakoti peetha— the other two being the Jalandhar and the Odhyana Peetha, he made Sree Sureshwaracharya, his foremost and fittest disciple, the next Jagadguru to be occupant of the Kamakoti peetha and the head of all the Maths in India." In section III, pages 19 to 21, the statement is repeated that Sree Shankaracharya

